३२पू] न चकार पुरा कश्चिन् न च कर्त्ता भविष्यति ।
N] सोऽमरेष्व् अपि लोकेषु सागरे सेतु-बन्धनम् ।
३२उ] उपाऽऽदाय सुरान् सेन्द्रान् भविताऽन्यत्र राघवात् ॥७॥[N
ये रामम् एवं द्रक्ष्यन्ति सम्-अन्ताद् अ-कुतोभयम् ।
३३ ] कारयन्तम् इमं सेतुं सम्-उद्रे सरितां पतौ ॥८॥ [N
तेषां पुत्रा भविष्यन्ति वीर्य-वन्तो यशस्-विनः ।
३४ ] आ-हर्त्तारः परोऽर्ध्यस्य यशसो वि-क्रमस्य च ॥९॥ [N
यावत् सम्-उद्रस् तावच् च सेतु-बन्धोर् (?न्धो) भविष्यति ।
३५ ] यावच् च सागरे कीर्तिस् तावद् रामे भविष्यति ॥१०॥[N
कः सम्-उद्रस्य बध्नाति सेतुम् इत्य्-एव चारणाः ।
३६ ]विद्या-धराश् च शत-शः सु-प्रीतास् तूर्णम् आ-ययुः ॥११॥[N
रामः सेतुं समुद्रस्य बध्नातीऽति दिशो दश ।
३७ ] जगाम तुमुलः शब्दः पृथिव्याम् अपि शुश्रुवे ॥१२॥ [N
तद् अ-चिन्त्यम् अनाऽधृष्यम् अद्भुतं लोम-हर्षणम् ।

---

१. रा—कर्ता नाकरिष्यति । ब—कर्ता भविष्यति । प्र म ल$_1$ ल$_2$ अ—कर्ता न करिष्यति । २. च—सामरेष्वविलो० । रा ब म ल$_1$—सामरे त्रिषु । प्र ल$_2$ अ—सामरेषु च । ३. फ—सुराजेन्द्राद् । ४. च रा ब—भविता यत्र । ५. राघवः ॥ ६. आ—एव । ल$_1$—इति । ७. च—कारयन्तमि······॥ ८. आ रा प्र ब म ल$_1$ ल$_2$ अ—आहर्त्ता च । ९. रा ब म ल$_1$—परार्थस्य । प्र—पुराणस्य । ल$_2$ अ—परा यस्य ॥ १०. प्र ल$_2$ अ—समुद्रास् । ११. फ—तावतु सेतु एष । च म—तिष्ठेत तावत्सेतुर्भ० । रा ब—तिष्ठेतु सेतुर्भ० । प्र ल$_1$ ल$_2$ अ—तिष्ठन्तु तावत्सेतु । १२. आ—रामो ॥ १३. रा—समुद्रेषु । १४. रा प्र ब म ल$_1$ ल$_2$ अ—सेतुं नदनदीपतेः । फ—० ब चारणः । १५. रा ब—विद्याधरश् । १६. फ—चाप्सरसः । रा—च शतसः । १७. च—तूर्ण··········भ्ययुः । आ फ ब—तूर्णमभ्ययुः ॥ १८. रा—तुमुकः । १९. च—सुश्रुवे ॥ २०. प्र—तदा चिन्त्यमना० । आ फ—तदचिन्त्यमाना० । २१. रा च ब ल$_1$ ल$_2$—रोम० ॥

N] ददृशुः सर्व-भूतानि सागरे सेतु-बन्धनम् ॥१३॥ [७८
कृतानि प्रथमेनाऽह्ना[1] योजनानि चतुर्दश ।
N] वानरैर् नग[2]-संकाशैः सेतु-कर्मणि नि-ष्ठितैः[3] ॥१४॥ [६८
ततो विद्या-धराः सर्वे[4] देवा देवर्षयस् तथा ।
N] यक्ष-भूत-पिशाचांश्[5] च सर्वे चाऽप्सरसां गणाः ।
वि-स्मिताम् तस्थुर् आकाशे बध्यमाने[6] महोदधौ ॥१५॥ [७५
श्रान्तान् न तपते[7] सूर्यः कदाचिद् अपि वानरान्[8] ।
३८ ] अभ्राणि[9] जज्ञिरे[10] दिग्भ्यः पीत्वा[11] सूर्य-प्रभाम् इव ॥१६॥[N
प्र-ववर्ष च पर्जन्यो[12] मारुतश् च शिवो[13] ववौ[13] ।
३९ ] वृक्षेभ्यश् च तदा[14] जज्ञे कपि-भक्ष्यं[15] फलं परम्[16] ॥१७॥ [N
ततोऽस्तं[17] गत आदित्ये नि-षेदुर् वानरर्षभाः ।
आ-रक्षांस्[18] तु समा-स्थाप्य[19] सर्वे ते सर्वतो-दिशम्[20] ।
N] सुषुपुः[21] सुमहा-वीर्याः ससुग्रीव-विभीषणाः[22] ॥१८॥[23] [N
कथं दृश्येत[24] सा लंका कथं बध्येत सागरः ।
N] एवं[25] समुत्-सुका भूत्वा सेतवे[26] वानरर्षभाः ॥१९॥[23] [N

---

१. फ–प्रथमेह । च–प्रथमेणाह्ना । २. फ ल$_2$ अ–नाग० । ३. आ ल$_2$ अ–निश्चितैः ॥ ४. रा–सर्वैः । ५. रा–०पिशाचश् । ६. च–बध्यमाणेन ॥ ७. फ–सान्वान्न तपते । रा अ–आर्तानापतते । प्र ब म ल$_1$ ल$_2$–आर्तान्न तपते । अ–आर्तान्न पतते । ८. फ–सूर्यस्तदा वानरपुंगवान् । ९. प्र–अंभ्रानि । १०. च–०जज्ञिर । ११. आ रा–पीता ॥ १२. आ–पर्यन्यो । फ–पर्यण्यो । रा–पर्यन्यै । १३. आ–शि······वौ । १४. फ म–तथा । १५. फ ल$_1$–०भक्षं । १६. रा प्र ब ल$_2$ अ–परं फलं । फ म–फलं बहु ॥ १७. ब ल$_2$–ततोस्तगत । १८. आ ल$_1$–अरक्षंस् । प्र–आरक्ष्यंस् । १९. आ च रा प्र ल$_1$ ल$_2$ अ–समास्थाय । म–सममास्थाय । २०. च–पर्वता दिशम् । २१. आ–सुषुवुः । फ–सुष्टुवुः । २२. रा म ल$_1$–०विभीषणः । २३. ब–नास्ति ॥ २४. रा–दृश्यंत । २५. आ रा म–कथं । २६. आ फ प्र म ल$_1$ ल$_2$ अ–सेरते । रा म–सर्वे ते ॥

उत्साह-युक्ता हरयः कौतूहल-समन्विताः ।
N] रात्रि-शेषं तद्[1] अत्य्-उग्रं निन्युः कृच्छ्राद् इवोदिताः[2] ॥२०[N
ततः प्रभात-समये कृत्वा पौर्वाऽह्नि(?ह्णि)कीं[3] क्रियाम्[4] ।
परस्परं समुत्-सृत्य[5] प्र-स्थिताः सर्वतो-दिशम् ।
N] ततः शृङ्गाणि[6] जगृहुः पर्वतानां प्लवं-गमाः ॥२१॥ [N
विचित्र-पुष्पा[7] गिरयो धातु-चित्र-शिखास्[8] तथा ।
N] शोभन्ते हरि-शार्दूलैर् उद्-यतैः[9] सेतु-बन्धने ॥२२॥ [N
तानि [10]कोटि-सहस्राणि वानराणां महाऽऽत्मनाम् ।[11] [७९पू
N] चिक्षिपुर् वि-विधं द्रव्यं सम्-उद्रे सेतु-बन्धने ॥२३॥ [N
शालैस्[12] तालैः स-संतानैः तथा वेत्र-लता-शतैः[13] ।
N] सेतुं बबन्धुः[14] कीलैश् च वृत्तैश् च सु-महा-बलैः ॥२४॥ [N
नागैर्[15] मेघ-निकाशैश् च नगैः[16] परम-पुष्पितैः ।
N] तैः स-मूलैः स-पत्रैश् च नलः सेतुं बबन्ध ह[17] ॥२५॥ [N
[18]बलिभिर् वानरैर् वेगाद् बाहुभिस् तीर-जा द्रुमाः ।
N] ताडिताः पातिताश् चैव सम्-उद्रे सरितां पतौ ॥२६॥ [N
प्रिय-कामस्[19] तु रामस्य सु-ग्रीवः सं-प्र-हर्षयन्[20] ।

---

१. ब तदात्युग्रं । २. फ च रा प्र ब म ल१ ल२ अ–इवोद्यताः । ३. रा–पौर्वाणिकिं । ४. रा–क्रिया । ५. आ फ म–समुत्साद्य । प्र–समुत्स्राय । आ–समासाद्य । ६. रा ब–शृङ्गानि ॥ ७. च–विचित्रा पुष्पा । ८. रा–धातुश्चित्र० । प्र–धातुश्चित्रशिखस् । ९. आ फ–हरिशार्दूलै उद्यताः । च–०शार्दूलैरुद्यता । प्र–०शार्दूलैरुदितैः ॥ १०. आ–कोटी० । ११. इत क्रियाश्रितपाठः केषांचित्कोशानां साक्षतो पूर्वस्मिन्सर्गे टिप्पणाङ्कितः पठितश्चरः द्र० । अत एवाऽत आरभ्य 'सरितां पतौ' इत्यन्तः पाठो–च रा प्र ब म ल१ ल२ अ–नास्ति ॥ १२. फ–शाकताकैः । १३. फ–०चयैः । १४. आ–ववंध ॥ १५. आ–नगमेनि० । १६. फ–नागैः । १७. फ–व्यबंध यत ॥ १८. फ–वलिभि ॥ १९. रा–०कामास्व । २०. फ–समहर्षयत ।

N] वि-बन्धुं[1] से समा-रेभे स्वयं[2] नद-नदी-पतौ ॥२७॥ [N
वेग[3]-सारो(?रि) प्लु (?प्रं) गे काले महाऽभ्रम् इव वायुना ।
N] स्वयं वानर-राजेन गिरि-शृङ्गम् उपाऽऽहृतम्[4] ॥२८॥ [N
सु-ग्रीवः शैल-शृङ्गाणि[5] गिरीणां शिखराणि[6] च ।
N] आ-रुह्य[7] शत-शो वृत्तैश् चिक्षेप लवणाऽम्भसि ॥२९॥[8] [N
दर्दुरस्याऽङ्गदः श्री-मान् शृङ्गम् आ-रुह्य पाणिना ।
२५] लवणाऽम्भसि चिक्षेप स-विद्युतम् इवाऽम्बुदम्[9] ॥३०॥ [N
अर्द्ध-योजन-विस्तीर्णं[10] विन्ध्यस्य शिखरं[11] महत् ।
N] सु-षेणः[12] पाणिना[13] गृह्य पातयामास सागरे ॥३१॥ [N
प्रक्षिप्त-मात्रे[14] शिखरे[15] जल-राशिः[16] समुत्-थितः[17] ।
N] आकाशाऽभि-मुखो[18] भूत्वा वि-ससर्प[19] समन्त-तः ॥३२॥ [N
नीलेन मलयस्याऽथ शृङ्गं[20] द्रुम-शताऽऽकुलम् ।
दोर्भ्याम् उत्-पाट्य[21] तरसा क्षिप्तं[22] लवण-सागरे ।

१. आ—त्रिवद्धुं । फ च—वद्धुं । प्र रा अ ब ल१, ल२ म—बंद्धुं । २. फ च प्र रा म अ—समारभत्सेतुं स्वयं । ब ल१—समारभेत्सेतुं स्वयं । ल२—समारेभे सेतुं स्वयं ॥ ३. फ—वेगेनोपप्लवे । रा—वेगसारोष्णवो । आ प्र ब ल२—वेगसारोष्णगे । अ म ल१—वेगसारो प्लवे । ४. फ ब—उदाहृतम् ॥ ५. फ—०शृंगानि । ६. फ—शिषराणि । ७. फ—आरुह्यारुह्य शतशश् । ८. प्र ब म ल१, ल२ अ—नास्ति ॥ ९. आ—इवां मुदम् ॥ १०. आ—०विस्तीर्णं । ११. अ—शिषरं । १२. फ च—सुखणः । प्र—सुखेणः । फ—सुखेनः । १३. रा प्र ब म ल१, ल२ अ—पातयामास पाणिना गृह्य ॥ १४. च म ल१ अ—प्रक्षिप्यमाणे । रा प्र ब ल२—प्रक्षिप्यमाने । १५. फ रा—शिषरे । १६. च—०रासि । रा—०राशिं । १७. प्र—समुत्थिता । १८. च रा प्र ब म ल१, ल२ अ—गत्वा । १९. रा—विससर्ज ॥ २०. रा—शृंगद्रुमश० । फ—शृंगं द्रुमसमाकुलं । प्र ब म—शृंगं द्रुमलताकुलम् । च—शृंगं द्रुम० । २१. आ फ—उत्पाद्य । ब—उत्पात्य । २२. रा—क्षिप्रं ।

N] शब्दश् च सु-महान् य(![1]ज) ज्ञे वि-द्युताम् अम्बरे यथा ॥३३[N
स-शृंगं[2] चन्दन-वनं सर्व-तः पुष्पितं महत् ।
२६] आ-रुह्या[3]ऽऽजह्रतुः [4]शीघ्रं मैंदश् च द्वि-विदश्[5] च ह ॥३४॥[N
हनू-मता च वीरेण यत् कृतं सेतु-कर्मणि ।
सप्त-योजन-विस्तीर्णं पर्वतं प्राऽऽप्य पाणिना ।
N] लवणा[6]ऽम्भसि चिक्षेप मध्ये कपि-वृषभस् तदा ॥३५॥[7] [N
गजो गवाऽक्षो गवयः [8]शरभो गन्ध-मादनः ।
शृंगाण्य्[9] आ-दाय [9]पंचैते महेन्द्रा[10]द् आ-गता[10] द्रुतम्[11] ।
N] चिक्षिपुः सहसा सर्वे पर्वतान्[12] पर्वतोपमाः ॥३६॥ [N
पर्वतां[13]श् च सुसं-क्रुद्धाः[13] पतन्तः[14] सागरे[14]ऽम्भसि ।
N] क्षोभं चक्रुः[15] सम्-उद्रस्य[16] क्षीरोद[17]स्येव मन्थने[18] ॥३७॥ [N
गिरीणां भिद्यमानानां सागरे सेतु-कर्मणि ।
N] भुवि[19] दिव्य् अन्तरिक्षे[19] च शुश्रुवे[20] नि-नदो[21] महान् ॥३८॥ [N

१. फ च रा प्र ब म ल१ ल२ अ—जातो ॥ २. प्र—सशंखं च० । च—सश्रृंगं चन्दनवने । ल२ अ—सश्रृंगचन्दनवने । ३. फ प्र ब म ल२—आरुह्य जह्रतुः । फ—आरुह्य जह्रतुः । ४. फ च प्र ब म ल१,ल२ अ—श्रीमान् । रा—क्षिप्रं । ५. च—द्विविधश्च । ल१ अ—द्विद्विधश्च । ६. फ—लवनाम्भसि । ७. प्र ब म ल१ ल२ अ—नास्ति ॥ ८. आ—सरभो । ९. च प्र ब ल१—पंचैते शिखरान् गृह्य । रा—पंचैते शिखनाम्गृह्य । १०. रा—महेन्द्रागता । ११. फ—द्रुमम् । १२. फ—पर्वतात् ॥ १३. फ च रा म ल१ ल२ अ—पर्वतास्तु सुसंमुक्ताः । प्र—पर्वतास्तासु संमुक्ताः । प्र—पर्वतास्तु समुत्यक्ताः । १४. प्र ब अ—पतंतो लवणाम्भसि । १५. च—चक्रं । १६. प्र ब ल२ अ—समुद्यम्य । १७. आ—क्षारोदस्यैव । च रा प्र ब ल१ ल२ अ—सागरस्येव । १८. आ—बन्धने । रा—मन्थनम् । ब—मंथरे ॥ १९. च प्र ल१ ल२ अ—दिवि भुव्यन्त० । रा ब म—दिवि भूम्यन्त । २०. रा ब म ल२ अ—श्रूयते । प्र ल१—श्रूयेत । २१. आ—नास्ति ॥

तेन वि-त्रासिताः सर्वे मृग-पक्षि-गणा वने ।
२८] अशक्नुवन् प्रति-स्थातुं शरीरेष्व् एव शेरते ॥३९॥[1] [N
आश्चर्यम् इत्य्-अभाषन्त[2] मुनयो दिवि[3] सं-स्थिताः ।
N] पुष्प-वर्षाणि मुमुचुः[4] स-गन्धर्व-महोरगाः[4] ॥४०॥ [N
साधु साध्व् इति भाषन्तो[5] वानरान्[6] प्र-शशंसिरे[6] ।
N] देव-दुन्दुभयो[7] नेदुर् ननृतुश् चाऽप्सरो-गणाः[8] ॥४१॥ [N
तुंबरु[9]-प्रमुखाश् चैव गन्धर्वा गीत-कोविदाः[10] ।
N] दिव्य[11]-तानेषु गायन्ति तन्त्री-लय-समन्वितम्[12] ॥४२॥ [N
दिवि तेषां नि-नादस् तु वानराणां च नि-स्वनः ।
पर्वतानां च सं-घर्षाच्[13] छन्दः[13] सम्-अभवत्[14] तदा[14] ।[15]
N] शुचि[16] शुक्र (?क्रे)-व्यतिक्रान्ते[17] मेघानां गर्जताम्[18] इव ॥४३[N
सत्त्वानां च महा-नादैः स्वनिता[19] गिरि-कन्दराः[20] ।

१. आ प्र ब म ल१ ल२ अ—नास्ति ॥ २. फ—अभाषस्तं । ३. रा दिति । ४. फ—मुमुचुस्तथा गंधर्वपन्नगाः ॥ ५. फ रा प्र ब म ल१—चाभाष्य । च—चोभाष्य । ल२ अ—वाभाष्य । ६. आ—वानराः प्रशशंशिरे । फ—०रान् प्रशसंशिरे । च—वानरांश्च प्रसंसिरे । रा ब—वानरेन्द्रा शशंसिरे । ७. रा—देवदुंदुभयो । ८. प्र—चाप्सरसो गणाः ॥ ९. च प्र अ—तुंबुरु०। १०. च रा—० कोविदा । ११. फ—दिव्यगाणेषु । प्र च—दिव्यगानेषु । ब म ल१ ल२ अ—दिव्यागानेषु । १२. रा—दिव्या गायन्ति गीतानि तंत्रीलयसन्वितम् ॥ १३. च—सवर्माछन्दः । आ रा—संहर्षाच्छब्दः । १४. रा प्र ब म ल१ ल२ अ—०वन्महान् । १५. प्र—पर्वतानां च सर्वेषां वर्षाच्छब्दो अभवन्महान् । १६. फ—शचि । १७. ब म ल१—शुक्लव्यपगमे । फ—नक्रव्यतिक्रामे । च प्र रा ल२ अ—शुक्रव्यपगमे । १८. फ—गर्जितानि च ॥ १९. आ—स्वनित्वा । च रा प्र ब ल१ ल२—स्तनिता । म—स्तनिता ( स्तामिता ) । २०. रा—गिरिकन्दरा । ल१—गिरिकंधराः ।

N] तेन शब्देन महता नाऽन्योऽ[1]श्रूयत केश्[2]-चन ॥४४॥ [N
द्वितीयेऽहनि तस्मिंस् तु मध्यं[3] प्राऽऽप्ते दिवा-करे ।
N] श्रान्तास् तु वानराः सर्वे वृक्ष-मूलानि भेजिरे ॥[4]४५॥ [N
फलानि भक्षयित्वा[5]ऽथ पीत्वा च[6] वि-विधं जलम् ।
N] वि-श्रान्ताश् च वि-तृष्णाश्[7] च पुनः सर्वे प्र-पेदिरे[8] ॥४६ [N
वृक्षान् केचित् समा-जह्नुः शिलाः केचित् समा-हरन् ।
N] पर्वतानां तथा सानूंस् तृण-काष्ठांस् तथाऽपरे ॥४७॥ [N
क्षिपन्ति सहसा हृष्टा वानरा लवणाऽम्भसि ।[9]
N] क्षिप्तं[10] क्षिप्तं नलः सर्वं[11] समी-भूतं[12] करोति च[13] ॥४८॥ [N
आ-गतैर् गर्जमानैश्[14] च नर्द-मानैश्[15] च वानरैः ।
N] पर्वतैः क्षिप्यमाणैश्[16] च सं-कुलं सर्व-तोऽभवत्[17] ॥४९॥ [N
दिवसेन द्वितीयेन षड्विंशद् योजनानि तु[18] ।
N] बद्धानि वानरैस्[19] तैश् च समुद्रे सेतु-कर्मणि ॥५०॥ [N
पश्चिमायां तु सन्ध्यायां यथा-स्थानानि भेजिरे ।

१. फ च रा— नान्यच्छूयत । ब अ—नान्यः श्रूयेत । प्र म ल१ ल२—नान्यच्छूयेत । २. फ च रा प्र ब म ल१ ल२ अ—किंचन ॥ ३. प्र ल१ अ—मध्ये । ४. फ—श्रान्तास्तु वृक्षमूलानि भेजिरे वानरर्षभाः । ५. फ—भक्षयित्वा तु । च प्र ब म ल१ ल२ अ—भक्षयित्वा च । रा—भक्ष्ययित्वा च । ६. फ—तु । ७. आ ल२ अ—वितृप्ताश् । ८. फ च रा प्र ब म ल१ ल२ अ—प्रतस्थिरे ॥ ९. च रा प्र ब म ल१ ल२ अ—नास्ति ॥ १०. फ—क्षिप्तं क्षिप्तं । रा—क्षिप्तं क्षिप्तं । ११. रा—सर्वे । १२. रा—शमीभूते । ब म—शमीभूतं । १३. फ च रा प्र ब म ल१ ल२ अ—सः ॥ १४. आ—०माणैश् । प्र—हृष्टमानैश् । १५. रा प्र ब ल२ अ—नंदमानैश् । १६. आ फ च ब म ल१ अ—०मानैश्च । १७. च—पर्वतोऽभवत् । प्र—सर्वतो भवेत् ॥ १८. रा ब—च । १९. फ च रा ब म ल१ ल२ अ—वानरैस्तैस्तु । प्र—वानरेन्द्रैस्तैः ॥

N] कर्माणि कथयन्तस् ते स्वानि स्वानि प्लवं-गमाः ॥५१॥ [N
रामाय[1] कथयन्ति स्म पश्य सेतुं महोदधौ ।
N] राम-पादाव्[2] उप-स्पृश्य सु-ग्रीवस्य च[3] वानराः ॥५२॥ [N
शिश्यिरे[4] तत्र तत्रैव केचिज्[5] जाग्रति हर्षिताः ।
N] समुत्-सुकानां तेषां तु गता सा शर्वरी[6] सुखम्[7] ॥५३॥ [N

इत्यार्षे रामायणे[8] सुन्दर-काण्डे सेतु-कर्माऽऽरम्भो[9] नाम[10]
सप्तनवतितमः सर्गः ॥९७॥

१. च—रामां य । २. फ च—रामपदानुपस्पृश्य । रा—रामपादाम्बुज-स्पृश्य । ३. च—तु ॥ ४. फ—शंशिरे । आ ब—शिखिरे । रा—शिशित । प्र ल, ल$_2$ अ—शिशिरे । ५. फ—केचिजयेति । रा—केचिज्जागर्ति । प्र—केचिच्च प्रतिहर्षिताः । ६. आ फ—सर्वरी । च—···र्वरी । ७. च—सुखम् ॥ ८. अ—नास्ति । ९. फ—सेतुकर्म । १०. च—नास्ति ॥

प्र-भातायां तु शर्वर्याम् उद्-गच्छति दिवा-करे ।
N] वानराणां सहस्राणि प्र-युतान्य् अर्बुदानि च ॥१॥ [N
तथैवर्क्ष-सहस्राणि गो-लांगूल-शतानि च ।
N] बबन्धुः सागरे सेतुं राघव-प्रिय-काम्यया ॥२॥ [N
अहं पूर्वम् अहं पूर्वम् इति शैलान् प्र-चिक्षिपुः ।
N] क्षिप्ता पर्वत-वृष्टिः सा चालयामास सागरम् ॥३॥ [N
क्षुभिते सागरे तस्मिन् क्षुब्धाः सागर-वासिनः ।
N] नागाश् च दानवाश् चैव किम् एतद् इति मेनिरे ।
प्र-लयः किं नु संप्राप्त उताहोऽमृत-मन्थनम् ॥४॥ [N
N] सेतु-कर्म समा-रब्धं रामेण विदितात्मना ।
ज्ञात्वैवं तत्त्व-तस् ते तु निरुद्-विग्नास् ततः स्थिताः ॥५॥ [N

---

१. प्र म ल$_1$ ल$_2$ अ—च । २. आ फ—सर्वर्याम् । च—सर्वयाम् । ३. च रा प्र ब म ल$_1$ ल$_2$ अ—उदिते च । ४. ब ल$_1$—अर्बुधानि ॥ ५. फ—तथा ऋक्षस० । ६. च रा प्र—गोलांगूलायुतानि । ब म ल$_1$ अ—गोलांगूलयुतानि । ७. आ फ च रा ल$_1$—बबंधु । ८. च रा प्र ब म ल$_1$ ल$_2$ अ—राघवप्रीतिकाम्यया ॥ ९. च—अहं पूर्वं इति शो···प्रचिक्षिपुः । प्र—शैलान् प्रचिक्षपुः । १०. च—पर्वतावृष्टिः सा । रा—पर्वतवृष्टिश्च ॥ ११. च प्र रा ब म ल$_1$ अ—०भूमयः । १२. च—नागांश्च दानवांश्चैव । १३. रा—प्रलय । १४. म—तु । १५. च—संप्रातः । रा—संप्राप्ता । १६. आ—ताहोऽमृत० ॥ १७. आ फ—समारब्धः । १८. फ च ब—ज्ञात्वैव । १९. च रा प्र ब म ल$_2$ अ—विदिताः सर्वे । ल$_1$—विधिताः सर्वे । २०. रा ब ल$_1$ ल$_2$ अ—निरुद्योगास् । प्र—निरुद्वेगास् ॥

N] वानरा[1] रभसेनैव बबन्धुः सागरं[2] तदा ।
अन्ये च[3] सूत्रं गृह्णन्ति दृष्टिं[4] सं-चारयन्त्य्[5] अपि ।[६०पू
N] समश्[6] च क्रियताम्[7] एष नलम् एवं[8] बभाषिरे ॥६॥ [N
अन्ये[9] क्षिपन्ति ह्य् उपलान् पाद-पान् अपरे पुनः[10] ।
N] वि-श्रामन्त्य्[11] अपरे क्रान्ताः[12] केचिन् निद्रां सिषेविरे[13] ॥७॥[N
आऽस्फोटयन् ववल्गुश्[14] च चक्रुः किलकिलाम्[15] अपि[16] ।
N] वृत्ताद् वृत्तं पतन्त्य्[17] अन्ये पर्वतात्[18] पर्वतं तथा ॥८॥ [N
दिवसेन[19] तृतीयेन[19] चत्वारिंशद्[20] योजनानि तु[21] ।
N] बद्धानि[22] कपिभिर्[23] वीरैः शेषं तु दश-योजनम् ॥९॥ [N
स्वस्त्य्[24] अयं बध्यते सेतुर् इति कृत्वा[25] प्लवं-गमाः ।

---

१. प्र-वानराः । २. फ-सागरे । ३. च ल१-सूत्रं गृह्णन्ति । रा ब म अ-सूत्रं प्रगृह्णन्ति । प्र-सूत्रं प्रगृह्णन्ति । आ म ल२ फ अ-च सूत्रं गृह्णन्ति । ४. आ-दृष्टिं । फ-त्रृष्टिं । प्र-हृष्टं । म ल२ अ-सृष्टिं । ५. फ-वा वारयन्त्यपि । च रा प्र ब म ल१ ल२ अ-संधारयन्त्यपि । ६. फ-समैश्च । ७. च-क्रियातामेष । आ-क्रियतामेव । ८. रा ब-एव ॥ ९. च-आक्षिपति ह्यचलान् । प्र म ल१ ल२ अ रा ब-आक्षिपन्नचलान् केचित् । १०. रा प्र ब म ल१ ल२ अ-मुहुः । ११. रा ल१-विश्राम्यं ह्यपरे । म-विश्रम्यंत्यपरे । १२. च प्र ब म ल२ अ-श्रांताः । रा ल१-श्रांता । १३. च-निषेविरे ॥ १४. म ल२-आस्फोटन् वत्वल्गुश्च । आ-०यन्प्रावल्गांश्च । च-०यन्प्रवल्गुश्च । १५. फ-किलकिलान् । १६. प्र ल१-हृति । १७. च-पतत्यन्ये । १८. प्र-पर्वतान् ॥ १९. रा-दिवसे तृतीये चैव । २०. फ च रा प्र ब म ल१ ल२ अ-पंचाशद् । २१. रा प्र ब म ल१ ल२ अ-च । २२. च-वद्धानि । २३. रा प्र ब-कपिभि ॥ २४. आ-स स्वयं । फ-स्वल्पोयं । रा-स्वस्स्वयं । २५. रा प्र ब म ल१, ल२ अ-मत्वा ।

N] धृति-मन्तः[1] प्र-सुप्तास् ते कृत-कर्माण[2] एव च ॥१०॥ [N
प्र-भातायां निशायां[3] तु रामम् ऊचुर् वनौकसः ।
N] अद्य[4] राम महा-बाहो सेतुर्[5] नि-ष्ठां गमिष्यति ॥११॥ [N
अद्य द्रक्ष्यसि तां लंकां पुरीं[6] रावण-पालिताम् ।
N] एवम् उक्त्वा[7] ततो रामं वानरास् ते महा-बलाः॥१२॥ [N
एकोत्-पातेन[8] ते सर्वे[9] समुत्-पेतुः[10] प्लवं-गमाः[11] ।
N] जगृहुश् चैवं[12] वृक्षांस् ते शिलाः[13] के-चित् प्लवं-गमाः[14]॥१३॥ [N
शैल-शृङ्गाणि[15] चाऽप्य् अन्ये तृणं[16] काष्ठम् अथाऽपरे ।
N] अन्ये च वादयन्ति[17] स्म बहुना किं प्र-योजनम् ॥१४॥ [N
अन्योऽन्यस्य तु[18] तेजांसि वर्द्धयन्तः परस्-परम्[19] ।
N] आकाशं छादमानास्[20] ते वर्षा-काले घना[21] इव ॥१५॥ [N
नर्दमाना[22] महा-नादं प्रावृट्-काल[23] इवाऽम्बु-दाः[24] ।

---

१. च–धृतिमन्तः । २. रा–कृतकर्मण ॥ ३. रा प्र ब ल, ल, अ–तु शर्वर्यां । म ल,–तु सर्वर्यां । ४. फ–पश्य । ५. अा फ–सेतुः ॥ ६. रा–पुरिं । ७. अा फ–उक्ता ॥ ८. च–एकोत्पातेन । ९. फ–खे । च–रुध्वं । प्र रा ब म ल, ल, अ–खं । १०. फ म ल, ल, अ–०पेतुर् । ११. फ च रा ब–वल्लीमुखा । म ल, ल, प्र अ–वलीमुखाः । १२. रा–चै··· । १३. च रा प्र ब म ल, ल, अ–शैलान् । १४. रा–प्लवंगमा ॥ १५. रा ब–०शृंगानि । १६. म ल,–तृणकाष्ठानि चापरे । च प्र–तृणं काष्ठान्यथापरे । रा ब ल, अ–तृणं काष्ठानि चापरे । १७. प्र–वादयन्ति ॥ १८. फ च रा प्र ब म ल, ल, अ–च । १९. फ च रा प्र ब म ल, ल, अ–प्लवंगमाः । २०. फ–अभ्रसंकाशं छादयन्तो । च रा प्र ब ल, ल, अ–शस्त्रसङ्काशं छादयन्तो । म–छायामासु वर्षाकाले ( शस्त्रसंकाशं छादयन्तो ) । २१. च प्र ल,–गणा ॥ २२. रा ब म ल, ल, अ–नन्दयन्तो महानादान । प्र–नादमाना महानादान् । च–नर्दमाना महानादान् । २३. अा–प्रावृ······ल । च रा प्र ब म ल,–प्रावृट्काले । २४. च–०म्बुदा ।

N] आकाशे सम्-अदृश्यन्त पक्ष-वन्त इवाऽचलाः ॥१६॥ [N
पर्वतानां ततो वृष्टिश् छादयन्ती नभस्-तलम् ।
N] सागरोपरि मुक्ता सा शेषं संछाद्य(?द्याऽ)धिष्ठिता ॥१७॥[N
दश-योजन-मात्रं तु सर्वं बद्धम् अ-शेषतः ।
बद्धो बद्धेति वदतां सिद्धानाम् अम्बरे स्वनः ।
N] वानराणां च हृष्टानां सहसा सं-बभूव ह ॥१८॥ [N
दश-योजन-विस्तारं शत-योजनम् आ-यतम् ।[13] [७६पू
१२] नलश् चक्रे महा-सेतुं मध्ये नद-नदी-पतेः ॥१९॥ [६१पू
समुद्र-वरदानाच् च संवि-धानाच् च कर्मणः ।
४०] सेतुः[16] स्व्-अल्पेन कालेन नि-ष्ठां प्राऽऽप्तोऽभवत् तदा ॥२०॥ [N
४१पू] वेला-मूलात् प्र-वृत्तः सँल् लंका-मूले प्रति-ष्ठितः ।
४२उ] अशोभत तदा सेतुः सीमन्त इव सागरे ॥[20] २१॥ [N
नलेन सु-कृतश्[21] चाऽसौ सेतुर्[22] मन्दर-संनिभः ।[20]

---

१. ल$_1$—आकाशं । २. आ—०शेऽस्त्रमदृश्यन्त । च—समादृश्यन्त । ल$_1$—शस्त्रशङ्काशं । ३. फ—वृष्टा छादयन्ति । च—वृष्टि छादयन्ती । प्र—वृष्टिः छादयन्ती । ल$_1$—वृष्टिः छादयन्तो । ४. च—सागरा परिमुक्ता । ल$_2$ अ—सागरे परिमुक्ता । ५. रा—सो शङ्कं संशोध्य । ६. फ-तिष्ठतः । आ—धिष्ठिताः ॥ ७. रा ब—०मात्रे । ८. आ—नास्ति । ९. फ—प्रोचैः । १०. रा—स्वगृणम् । ब ल$_2$ अ—स्वराणाम् । ११. च—प्रहृष्टानां । १२. फ च रा प्र ब म ल$_1$ ल$_2$ अ—सः ॥ १३. फ रा प्र ब म ल$_1$ ल$_2$ अ—दशयोजनविस्तारमायतं शतयोजनम् । च—दशयोजनविस्तारमायते शतयोजनम् ॥ १४. रा ब प्र—वरदानाश् । १५. फ—विधानाद्विश्वकर्मणः । रा—संविधानाश्च कर्मण । प्र—सांवेनादाश्च । १६. प्र—स्वेन । १७. प्र—वेलाम्मूलात् । १८. फ च रा ब म ल$_1$ ल$_2$ अ—स । १९. आ—श्रीमन्त । २०. फ रा ब ल$_1$ ल$_2$ अ—नास्ति ॥ २१. प्र—विकृतश् । म—च कृतश् । २२. च प्र म—मेरुर् ।

N] मलयात् तु समा-रब्धो लंका-मूले प्रति-ष्ठितः ॥२२॥[1] [N
४२पू] सु-विशालैः[2] कृतः श्री-मान् सम-भूमिः[3] समा-हितः । [N
N] अदृश्यत तदा चित्रैः[4] स्वातैः पन्था इवाऽम्बरे[5] ॥२३॥ [४३
तस्य नाम[6] तदा चक्रुर् वानरास् ते सुवि-स्मिताः[7] ।
N] नलेनाऽयं कृतो यस्मान्[8] नल-सेतुर्[9] भविष्यति[10] ॥२४॥[11] [N
तं[12] नलेन कृतं सेतुं[12] सागरे सलिलाऽऽशये[13] । [७४पू
N] ददृशुः सर्व-भूतानि वि-स्मयं परमं ययुः ॥२५॥ [N
बद्ध्वा तु[14] तं[14] महा-सेतुं सु-ग्रीवो[15] वाक्यम् अब्रवीत् ।
N] एष सेतुर् महान्[16] बद्धः[16] सागरे वरुणाऽऽलये ॥२६॥ [N
कृत-कृत्याः[17] स्मो[18] राजेन्द्र हता लंका न सं-शयः ।[19]
N] रावणश् च हतः शत्रुः साऽमात्यः[20] स-परिच्छदः ॥२७॥ [N
बद्धं[21] दृष्ट्वा[22] ततः सेतुं[23] रामो दशरथाऽऽत्म-जः ।

---

१. फ रा ब अ ल₁ ल₂—नास्ति । २. प्र—सुविशालकृतः । आ फ रा—०लः कृत । ३. रा प्र—समभूमि स० । ४. आ—चित्राः स्थानैः । च—तत्र स्वः । रा म—तत्र स्वस्थाः । प्र ब ल₁ ल₂ अ—तत्र स्वस्थः । ५. प्र—इवाचले । ६. प्र—रामस्तदा । ७. प्र—समाहिताः । ८. फ—कृतस्तस्मात् । ९. प्र—०सेतु । १०. फ—भवस्विति । च रा ब म ल₂ अ—भवत्वयम् । ११. अतः परमधिकः पाठः—फ च रा प्र ब म ल₁ ल₂ अ—सेतुपृष्ठं यतः सर्वं नलेन सुसमं कृतम् । नलसेतुरिति ख्यातस्तस्य कीर्तिर्व्यवर्धत । ल₁—नास्ति ॥ १२. च प्र ब अ—नलेन च कृतः सेतुः । रा म ल₁ ल₂—नलेन च कृतः सेतु । १३. आ—सलिलार्णवे । च रा प्र ब म ल₁, ₂ अ—वरुणालये ॥ १४. फ—तं तु । १५. फ—सुग्रीवं । १६. आ—महाबद्धः । रा—महाबन्धः । ब—महावधः ॥ १७. च—कृतकृत्या । प्र—कृतकृत्यः । १८. प्र—स । १९. ल₁—अतः परं 'तं नलेनेति' श्लोकाऽर्धं पुनः पठ्यते पाठक्रमभंगश्चापलभ्यते । २०. रा—सामात्य सः स० ॥ २१. ल₂—बद्धः । २२. च रा प्र ब म ल₁ ल₂ अ—श्रुत्वा । २३. रा—सेतु ॥

N] अधि-रुह्य हनू-मन्तं पृष्ठं[1] नीलस्य[2] लक्ष्मणः ॥२८॥ [N
अग्र-तः[3] सर्व-सैन्यानां[4] श्री-मान् बल-समन्वितः ।

N] जगाम धन्वी[5] धर्माऽऽत्मा सु-ग्रीवेण[6] समन्व्-इतः[7] ॥२९॥[८४
आ-प्लवन्तः प्लवन्तश् च गर्जन्तश् च प्लवं-गमाः[8] । [७७

N] बद्धे तत्र तदा सेतौ[9] मध्ये नद्-नदी-पतेः[10] ॥३०॥ [N
केचिज् जलेन[11] धावन्ति सेतुना[12] केचिद्[13] एव तु[14] ।
N] केचिद् आकाशम् आ-विश्य सेतुं नैव स्पृशन्ति च॥३१॥
अन्ये[15] मध्येन[16] गच्छन्ति पार्श्वे चाऽन्ये प्लवं-गमाः[17] ।
N] सलिले[18] प्र-पतन्त्य्[19] अन्ये पन्थानं ये[20] न लेभिरे ॥३२॥[८९
४३उ] तानि कोटि-सहस्राणि[21] वानराणां महौजसाम्[22] ।
N] बद्ध्वा[23] तत्र महा-सेतुं जग्मुः पारं महोदधेः ॥३३॥ [७९
घोषेण[24] महता[25] घोषं सागरस्य समुत्-थितम् ।
N] भीमम् अन्तर्-दधे[26] भीमा तरन्ती हरि-वाहिनी[27] ॥३४॥ [८७

---

१. आ च प्र रा म ल$_1$ ल$_2$ अ—पृष्टे । ब—पृष्ठो । २. च म ल$_1$—नीलिम् । प्र रा ब ल$_2$ अ—नीलं च । ३. प्र—अन्यतः । ४. च रा प्र ब म ल$_1$ ल$_2$ अ—०सैन्यस्य । ५. रा—धन्व । ६. च ल$_2$—सुग्रीवेन । ७. ल$_1$—समंततः । ८. प्र—नास्ति ॥ ९. फ च रा ब म ल$_1$ ल$_2$—महासेतौ । प्र—समासेतौ । १०. अ—०पतौ ॥ ११. फ च रा ब म ल$_1$ ल$_2$ अ—जवेन । प्र—जीवेन । १२. प्र—वानराः । १३. च ब म ल$_1$ ल$_2$ अ—केचिदेव । १४. फ—ते । १५. फ—अथ । रा—अन्येन्ये । १६. आ—अन्येन । रा ब ल$_2$ अ—मध्ये तु । च प्र म ल$_1$—मध्ये च । १७. च रा—च वानराः । प्र ब म ल$_1$ ल$_2$ अ—तु वानराः । १८. ब—सलिलं । १९. च—प्रपतत्यन्ये । रा प्र म ल$_1$ ल$_2$ अ—च प्रयांत्यन्ये । २०. रा—ते । २१. फ—कोटीस० । २२. आ—महोजसाम् । २३. आ—बद्धा । २४. फ—घोरेण । च—घोषेणं । २५. प्र—च महाघोषं । २६. रा—अन्तर्दधत् । २७. फ ल$_1$—हरिवाहिणी ॥

तत: पारे सम्-उद्रस्य गदा-पाणिर् वि-भीषणः ।
४५] परेषाम् अभि-[1]घाताऽर्थम् अतिष्ठद् हरिभिः सह । [८१
यूथ-[2]पानां स[3]हस्रौघैः प्र-स्थितो लघु-विक्रमः ॥३५॥

४४उ] नि[4]ष्-पाद्य हरयः से[5]तुं प्र[6]तीऽताः संस्नुर् अर्णवम् । [N
यथा स्व-स्व-नि[7]वासेषु विषयेषु यथा-सुखम् ॥३६॥ [N
N] सा मुहूर्त्ते[8]न सं-तीर्णा[9] वाहिनी नल-सेतुना ।
तीरे विवेश रम्ये च[10] बहु-मूल-[11]फले शुभे ॥३७॥ [८८
१२पू] दश-योजन-विस्तार[12]म् आ-यतं शत-योजनम् ।[13]
N] सेतुं ददृशिरे हृष्टा देवा ऋषि-ग[14]णास् तदा ॥३८॥ [७६
तद् अद्भुतं राघव-कर्म-दु[15]ष्करं
सम्-ईक्ष्य देवाः सह-सिद्ध-चा[16]रणाः ।
नि-शम्य रामं स[17]हसा म[18]हर्षिभिस्
N] तम् अभ्य्-अनन्दंश् च वचोभिर् अ-व्ययम्[19] ॥३९॥[८९

---

१. च रा प्र ब म ल$_1$ ल$_2$ अ–०घातार्थं चतुर्भिः सचिवैः । आ–०घातार्थमतिष्ठद्धरिभिः । २. ल$_2$–यूथपानं । ३. च–सहस्त्रौघैः । ४. च रा प्र ब ल$_1$ ल$_2$ अ–निष्ठाय । म–निष्ठाय (निष्पाद्य) । ५. रा–सेतु । ६. आ–प्रतीताः शंसुसत्तुर् । फ–तीर्णास्तेनैवार्णवम् । च–सुप्रीताः सस्नुस्तुर् । रा प्र ब म ल$_1$ ल$_2$ अ–सुप्रीताः सस्नुर् । ७. आ म–अथाश्वसुर्हरिश्रेष्ठा । फ–अथाश्वसु वस्त्रेषु । अ ब ल$_1$ ल$_2$ प्र रा–०निवासेत्यारभ्य ०विस्तारमित्यन्तः पाठस्त्रुटितः । ८. फ–०र्तेण । च–सुमुहूर्तेन । ९. च–सन्तीर्णो । रा प्र ब–नास्ति ॥ १०. फ च म–तु । ११. आ–०फलेष्वपि । च–०फलकाये । १२. च–०वितीर्णं । १३. म–०निवास इति पादं आयतं शत० इतिपादं चैकीकृत्याधिकः श्लोकार्धः पठितः । मध्यगतः पाठस्त्रुटित इव प्रतीयते । १४. फ च रा प्र म ल$_1$ ल$_2$–सर्षिगणास् । १५. च–दुस्करं । १६. ल$_1$ ल$_2$–०चारिणाः । १७. १६. च प्र–मुदिताः । रा ब ल$_1$ ल$_2$ अ–मुदितं । १८. अ ब ल$_1$ च प्र रा–सहर्षिभिस् । १९. आ–तमभ्यषिञ्चन्त शुभैर्जलैः पृथक् । फ–तमभ्यषिञ्चन् शुभैर्जलैः पृथक् ।

जयस्व शत्रून्[1] नर-देव मेदिनीं
स-सागरां[2] पालय[3] शाश्वतीः समाः ।
इत्य्-एव[4] रामं नर-लोक-सत्कृतं[5]
N] शुभैर् वचोभिर्[6] वि-बुधाः पुपूजिरे[7] ॥४०॥ [९०

इत्यार्षे[8] रामायणे[9] सुन्दर-कांडे समुद्र-सेतु-बन्धनो[10]
नामाऽष्टानवतितमः सर्गः ॥[11] ९८ ॥

१. ब—जयस्य शत्रुर् । २. ब—ससागरा । ३. च—पालश । ४. आ फ—इतीव । ५. आ—नरदेवसत्कृतं । फ—नरलोकसत्कृत । ६. फ रा म ल१—वचो विबुधाः । आ—वचोभिर्विधाः । ७. फ—सुपूजिरे । रा ब म ल१ ल२ प्र अ—अपूजयन् । ८. फ—आर्षे । ९. अ—नास्ति । १०. फ रा प्र ब—सेतुबन्धो । ल२ अ—समुद्रसेतुबन्धो ॥ ११. वं—इत्यार्षे रामायणे महर्षिवाल्मीकीये आदिकाव्ये चतुर्विंशतिसाहस्र्यां संहितायां सुन्दरकाण्डे सेतुबन्धनं नाम पंचनवतितमः सर्गः ॥ सुन्दरकाण्डं समाप्तम् ॥

[वं-N]= [नवनवतितमः सर्गः] =[दा-N]

ततो महाऽऽत्मा कृत-सेतुम् ईश्वरं
प्रतीत-रूपं विजयाऽभि-नन्दिनम्[1] ।
पुनः सम्-उद्रो[2]ऽभि-जगाम राघवं
प्र-भावम् अस्मै[3] वरदोऽभि-वर्धयन्[4] ॥१॥

तम् आ-गतं लक्ष्मण-वानराऽधिपौ
वि-भीषणेश्[5] चर्क्ष-पतिश् च जाम्ब-वान्[6] ।[7]
मुदा[8] प्रतीऽता हरयो वरं-प्रदं[9]
प्रणम्य[10] रामाऽभि-मुखाऽव-तस्थिरे ॥२॥

स दिव्य-रूपाऽऽभरणो महा-द्युतिर्[11]
नि-शम्य रामं[12] मुनि-वेष-धारिणम् ।
शिरस्य् उपाऽऽघ्राय जयाय पुत्र-वत्
सम्-ईक्षमाणोऽनुशशास[13] सागरैः[14] ॥३॥

---

१. रा म-०नन्दनम् । म ल$_2$-०नन्दितम् । २. म-समुद्रोभि(पि) ज०। ३. षष्ठ्यर्थे चतुर्थीयमार्षी द्र० । ४. म-न देवभिवर्धयन् । ब-०भिवर्धयत् ॥ ५. प्र-विभीषणो ऋक्ष० । ल$_1$-०षणश्चऋ० । ६. फ रा प्र ब म ल$_1$ ल$_2$ श्र-वीर्यवान् । ७. द्विः पठितः पाठः-प्र-तमागतं लक्ष्मणवानराधिपौ विभीषणस्य नृपतिश्च वीर्यवान् । ८. फ-मुखाः । ९. ब-स्वरपदं । १०. च-प्रणम्य रामं सगरस्यात्मजम् । रा-प्रणेम्य रामं सगरस्य चात्मजाम् । प्र ब म ल$_1$ ल$_2$ श्र-प्रणेमिरे तं सगरस्य चात्मजम् । विसर्गलोपे तत्पूर्वोत्तर-सवर्णसन्धिरार्षः द्र० । अथवा नात्र संधिः । उत्तरादेलोपस्याऽऽर्षस्येदमुदा-हरणं स्यात् ॥ ११. च-०द्युति । प्र रा ब ल$_2$-०द्युतिं । १२. श्रा-राम । १३. श्रा-समीक्ष्यमाणो० । रा-समीक्ष्यमानोनुसशास । ब ल$_2$-समीक्ष्यमानो० १४. रा-सागर ॥

न वत्से[1] युद्धे मुनि-वेषे[2] इष्यते
विभज्य[3] कर्माणि चरन्ति पार्थिवाः ।
स राम राजाऽऽभरणैर् अलं-कृतो
जयाय गच्छेति जगाद[4] स-त्वरः ॥४॥
तथेति चोक्तौ[5] वचनान्[6] महोदधेर्[7]
वि-सृज्य चीराणि जटां[8] नि-यम्य च ।
शुभानि राजाऽऽभरणानि चाऽऽदधे[9]
समुद्र-दत्तं[10] कवचाऽऽयुधानि[11] च ॥५॥
तथैव तेपे पुनर् अ-व्यतिक्रमं[12]
मनो-वचः-काय[13]-समाधिजं तपः[14] ।
पिता यथैनं[15] नि-युयोज[16] कृच्छ्रे[17]
स चाऽपि रामो ददृशे[18] महीं गतः[19] ॥६॥
स लक्ष्मणस्याऽपि तथा[20] यथाऽऽत्मनः[21]
चकार वर्माऽऽयुध[22]-भूषण-क्रियाम् ।
तयोर् द्युतिः सं-ददृशे[23] नराऽग्र्ययोः[24]

---

१. च–वत्सा । २. प्र ब–०वेश । ३. फ–विसृज्य । ४. आ फ म–चकार । ल$_1$–जगाम॥ ५. फ–चोक्ते । ६. आ रा म अ–वचनं । ७. म–०दधि । रा अ–०दधे । ८. च–यदा निरस्य । प्र रा ब ल$_1$ ल$_2$ अ–जटा विरस्य । म–जयं निशम्य । ९. आ फ च प्र म–चाददे । १०. म–समुद्रदत्तानि । ११. प्र–कवचानि चाददे ॥ १२. आ–अप्यतिक्रमत् । प्र फ–अप्यतिक्रमन् । च रा म ल$_1$–अभ्यतिक्रमन् । ब–ओ व्यतिक्रमन् । ल$_2$ अ–अभ्यतिक्रम । १३. फ–०कामः स० । रा–कायस........धिजं । १४. फ–तप । १५. आ–यदेवं । ब–यथैवं । १६. फ–नियुजोज । ल$_2$–नियुयोज्य । १७.फ–कृछतः । च रा प्र ब म ल$_1$ल$_2$ अ–कृत्ये । १८. रा–०दृशे । १९. च ब–महीगतः ॥ २०. च–यथा । २१. आ–यतात्मना । च–तथात्मनः । २२. च–वर्म्मयुधभूषणः क्रियाम् । फ–०भूषणोक्रयाः । २३. रा–स ददृशे । २४. रा ब–नराग्रयोः ।

सम्-एत्य चन्द्रोशनसोर् निशास्व् इव ॥७॥
ततस् तु रामं तपसा प्र-दीपितं
वरैश् च राजाऽऽभरणैर् अलं-कृतम् ।
अनुग्रहायोऽति-निनाय सागरः
सुदुष्प्र-वेशं वरुणस्य चाऽऽलयम् ॥८॥
स देव-राजं वरुणं वर-प्रदं
ज्वलन्तम् ऋद्ध्या समुदीर्ण-रूपया ।
प्रतीऽतम् आसीनम् उपेत्य राघवस्
तदा ववंदे शरणं जगाम च ॥९॥
अथाऽभ्य्-उवाचाऽऽशिषम् आयुषि ध्रुवं
नराऽधिपायाऽम्बु-पतिः प्रसन्न-वाक् ।
बले च वीर्ये च वि-वृद्धिम् आ-दधे
त्वरेति चोवाच जयेति चेश्वरः ॥१०॥
ततः सम्-उद्रः प्रविनीत-राघवं
पितेव पुत्रं प्र-शशास बुद्धि-मान् ।
भवाय कृत्वा भगवन्तं-प्रदक्षिणं

१. रा-समेतच० । २. आ-निशास्वि वा । फ-निशामिव । रा-निशास्विव ॥ ३. च रा प्र-प्रदीप्तम् । ४. फ-तथैव । ब-वैरश्च । ५. आ-०ग्रहायेति नि० । प्र च रा ब म ल२ अ-०ग्रहायाभिनि० । ६. फ अ च ब ल२ प्र रा म-सागरम् । ७. आ प्र अ-स दुःप्रवेशं । फ-सुदुःप्रवेशं । च-सुदुप्रवेशं । रा-स दुष्प्रवेश । ८. फ-चलस्य वुध्या । ९. रा अ-समुदीणरूपयया । १०. अ-प्रीतम् । ११. फ च प्र-त्रुटितः ॥ १२. आ-आशिषं ध्रुवन् । फ-आयुषे ध्रुवम् । १४. आ फ-आददे । १५. रा ल२-चोक्ताथ । प्र ब म ल२ अ-चोक्तवाथ । १६. प्र-चेश्वर ॥ १७. आ-प्रतिनीय रा० । च-प्रतिनीय राघव । रा-प्रतनीय रा० । १८. अ-पितैव । १९. फ-प्रशशंस । २०. च प्र रा ब म-भगवान् प्र० ।

ततोऽत्यं-अयात् सोऽपि यथाऽऽगतोऽभवत् ॥११॥

ततः प्रभुः सुखम् उषितो विभावरीं
पुरोदयं सवितुर् उपेत्य राघवः ।
महा-बलैस् समभि-वृतो बलाऽग्रणीर्
महो-द्रुमं समुप-जगाम पर्वतम् ॥१२॥

इत्यार्षे रामायणे सुन्दर-काण्डे समुद्र-दायं नाम
नवनवतितमः सर्गः ॥ ९९ ॥

---

१. आ च रा प्र ब म ल$_1$ ल$_2$ अ–ततोभ्ययात् । २. आ फ–यथागतं प्रभुः । च रा ब म ल$_1$ ल$_2$ अ–॰गतो भुवम् ॥ ३. ब–सुखमुषितो ४. ब–पुरोदयः । ५. आ–सेतुमुपेत्य । म–सवितुरुपेत्य । ६. फ–महाबलस् । ७. आ–स्वनिवृतो । च–स्वाभिवृतो । फ–स्वभिनिभृतो । ८. च रा–वलायणी । ल$_2$ अ ब–वलाय । प्र–वलाग्रैतैर् । ल$_1$–वलीमुखैर् । ९. फ–स (म) हद्भुतं । च रा प्र म ल$_2$ अ–महाद्भुतं । ल$_1$–सहाद्भुतं । ब–महाद्भुत ॥ १०. अ–नास्ति । ११. फ रा ब–समुद्रदायो । च– समुद्रदायवरुणदर्शनं । प्र म ल$_1$ ल$_2$–समुद्रदायो वरुणदर्शनं ॥

ततः शंखं-विमिश्रेण भेरी-शब्दाऽनुनोदिना ।
राघवस्याऽऽगमत् सैन्यं नाना-प्रहरणाऽन्वितम् ॥१॥
सम्-आसीनं ततस् तत् तु राघवस्य महद् बलम् ।
अशोभत तदा पूर्णं(?र्णः)सागरस् स्तिमितो यथा ॥२॥
सभा-गतस् ततस् तत् तु दृष्ट्वा राजा दशाऽऽननः ।
मुहूर्त्तं ध्यानम् आ-स्थाय सचिवान् अभ्युद्-ऐक्षत ॥३॥
अथ तान् सचिवांस् तत्र बभाषे रावणस् तदा ।
वाक्यं वाक्य-विदां श्रेष्ठः शृणुध्वं मम राक्षसाः ॥४॥
न चोद्योगे मनो वोऽद्य अयं प्राऽऽप्तश् च राघवः ।
सहितः सर्व-सैन्येन वानराणां स-लक्ष्मणः ।
साम्प्रतं चैव यत् कार्यं तत् कुरुध्वम् अ-कालिकम् ॥५॥

---

१. आ-शंवि० । २. रा-०नुपादिना । प्र०-नुयायिना । ३. आ फ च-रावणस्या० ॥ ४. फ रा प्र ब म ल$_1$ अ-तं । ५. प्र च ब म ल$_1$ ल$_2$ अ-राघवस्य महाबलं । आ फ-रावणस्य म० । ६. प्र च रा म ल$_1$ ल$_2$ अ-ततः पूर्णं स्त्रिमितः सागरो । फ-तदा तूर्णं स्तिमितः सागरो । च ब-ततः पूर्णास्तिमितः सागरो ॥ ७. आ-समागमं । फ प्र ब-समागतं । रा म ल$_1$ ल$_2$ अ-सभागतं । ८. च रा म ल$_1$ ल$_2$ अ-तं । ९. ल$_2$ अ-मुहूर्तं । १०. च-सचिवानः भ्युदैक्षत ॥ ११. फ-आगतान् । १२. प्र म ल$_1$-श्रेष्ठाः । १३. रा प्र-राक्षसा ॥ १४. फ-न चान्यो वानरो चाद्य शौर्ये । रा-न चोद्योग-मनोजबोद्यमयं । ब-न चोद्योगम........मयं । प्र-न चेद्योगोऽस्ति भवता-मयं । म-न चोद्योगो मनश्चाद्य सोयं । ल$_1$-नचोद्योगमसंभाष्य मयं । '·मनो वोद्य अयं' इति सन्ध्यभाव आर्षः द्र० । १५. च रा प्र ब म ल$_1$ अ-प्राप्तः स ॥

अव-ज्ञा न[1] च कर्त्तव्या[2] वानरेषु रणाऽजिरे ।
यैस् तृणी-कृत्य नः[3] सर्वान् सेतुर् बद्धो महोदधौ[4] ॥६॥
भवन्तश् चैव रागाऽन्धाः सुख-प्राऽऽप्ताः[5] प्र-संगिनः[6] ।
बध्यमानं तदा[7] सेतुं यन् न[8] वे(?वि)त्थ[9] निशा-चराः ॥७॥
चारो[10]ऽत्र न प्र-युक्तश्[11] च [12]सर्वैर् मन्त्रि[13]-पदे स्थितैः ।
हितं मन्त्रयते राज्ञस् तेन मन्त्री[14] नि-गद्यते ॥८॥[15]
कार्याऽकार्याणि[16] सततं राजा राज्ये[17] करोति वै ।[18]
तानि सर्वाणि कार्याणि मन्त्रिभिः सततोत्-थितैः[19] ।
अन्वेष्याऽन्विष्य[20] चिन्त्यानि तेन राजा[21] सहाय-वान्[22] ॥९॥
मन्त्रिभिः [23]सर्व-कार्याऽर्थाः कार्या नियम् अ-संशयम् ।
[24]एवं भवद्भिर्[25] वि-श्रम्भाद् [25]वञ्चितोऽहं निशा-चराः ।

---

१. रा ब–च न । २. च–०व्य । ३. आ–न । ४. रा प्र ब म ल$_1$ ल$_2$ अ–महार्णवे ॥ ५. म–सुखासक्ताः । च प्र ल$_1$ ल$_2$ अ–सुखसुप्ता । ब–सुसंप्राप्ताः । ६. च रा ब म ल$_1$–सुसंगिनः । प्र ल$_2$ अ–सुगंधिनः । ७. च ब म ल$_1$ ल$_2$ अ–तथा । ८. ब अ–नः । ९. रा–चेष्टां ॥ १०. फ–दारा अ ? । ११. आ फ–प्रयुक्तो वः । १२. रा ब अ–सर्वे । १३. आ फ–मंत्रपदे । प्र–मंत्रिपदै । १४. रा प्र ब म ल$_1$ ल$_2$ अ–मंत्रीति कथ्यते । १५. आ–इतोऽध्यर्धः श्लोको नास्ति ॥ १६. च ब म ल$_1$ ल$_2$ अ–यानि कार्याणि । १७. फ रा– राज्यं । १८. आ प्र–नास्ति । १९. रा ब म ल$_1$ ल$_2$ अ–सततोत्थितैः । प्र–सततोदितैः । २०. च–अन्विष्य चिन्त्यानि तानि । २१. च प्र रा ब म ल$_1$ ल$_2$ अ–राज्ञो महोदयः । २२. च–' निगद्यते ' इति पूर्वश्लोकपाठस्य पुनरुल्लेखभ्रमेण ' तानि कार्याणि सततं ' इति अस्याऽर्धस्य मध्य एव द्विर्लिखितः ॥ २३. आ फ–सह का० । २४. च–एकं । अ–कं... .. । २५. ल$_2$ अ–भवद्भि......वि० । आ–भवद्भिर् विश्रंभा चितोहं । फ–भवद्भिर् विश्रम्भावद्धचितो ॥

मामकं यदि वः कार्यं[1] नास्ति कार्यं मतं[2] हृदि ॥१०॥
अहम् एकः करिष्यामि शात्रवाणां[3] प्र-शासनम्[4] ।
चारं[5] वा[6]ऽत्र नि-योक्ष्यामि[7] सान्त्वं[8] भेदम् अथाऽपि वा ॥११॥
रावणेनैवम् उक्तास् ते[9] राक्षसा व्रीडिता भवन्[10] ।
व्रीडितानां ततस् तेषां मेघ-नादोऽभ्य्[11]-अभाषत ॥१२॥
किम्-अर्थं तप्यसे तात राघवाल् लक्ष्मणात्[12] तथा ।
वानरेन्द्राच्[13] च[14] सु-ग्रीवाद् वानराणां बलाद्[14] अपि ॥१३॥
मानुषो[15] नृपती[16] रामो[17] राज्य-भ्रष्टस् तथैव च ।
कथं बिभेषि[18] तस्मात्[19] त्वं देवान् कृत्वा[20] वशेऽनघ[20] ॥१४॥
इहाऽऽनीतो मया शक्रो नाग-पाशै[21]-(?शैर्) जितो रणे ।
वि-बुधा निर्-जिताः सर्वे स्वर्गं[22] गत्वा त्वया पुरा ॥१५॥
प्रेताऽधि-पो जितः संख्ये वित्तेशोऽत्र[23] परा-जितः ।

---

१. च–कार्ये । २. आ–कार्यं नम । फ–कार्य तम । च प्र ब म ल१ ल२ अ–कार्यतमं । रा–कार्यमतं । ३. फ च रा प्र म ल१–शात्रवानां । ब–शत्रुवानां । ४. फ–प्रबाधनं । च प्र रा ब म ल१–प्रसाधनम् । ल२ अ–प्रणाशनम् । ५. प्र–चाराश् । ६. फ रा प्र ब म ल१ ल२ अ–चात्र । ७. फ–नियोष्यामि । च म ल२–नियोयोमि । ८. आ च–शांत्वम् । फ–शान्तं ॥ ९. फ ब–तु । १०. आ–०ताभवं । अडभावो वा सन्धिर्वाऽऽर्षः । ११. च–०दो ह्यभाषत । आ–०दो भ्यभाषत ॥ १२. च–लक्ष्मणस् । १३. रा–वानरेंद्रात् । १४. च रा प्र ब म ल१ ल२ अ–तथा बलात् ॥ १५. प्र–मानुष्यो । १६. आ फ ब–नृपते । १७. ब–राम । १८. म ल१–बिभेष । १९. प्र–तस्माच्च । रा–कस्मात्त्वं । २०. च म ल१ ल२ अ–स्थाप्य व० । ब–स्थास्य व० । रा–कृत्वास्य व० । प्र–कृत्वाऽप्यव० ॥ २१. फ–०पाशैश्रितो । च–०पाशाऽसितौ । रा ब म ल१ अ–०पाशावृतो । प्र–०पाशाश्रितो । ल२ अ–रागपाशावृतो । २२. च–स्वर्गे । २३. फ रा प्र ब म ल१ ल२ अ–वित्तेशश्च । च–वित्तेन्द्रश्च ।

वरुण[1]ः काद्रवेयाश् च कालकेयाश् च दानवाः ॥१६॥
वसवो[2] मरुतश्[2] चैव तथा चन्द्र-दिवाकरौ ।
पृथिव्यां[3] सर्व-राजानो[4] निर्-जितास्[5] ते स्व-तेजसा[5] ॥१७॥
किं करिष्यन्ति ते राजन् वानरा वन-चारिणः ।
तौ[6] वा मानुष[7]-मात्रौ तु[8] भ्रातरौ राम-लक्ष्मणौ ॥१८॥
व्येतु[9] ते सं-भ्रमो राजन्[10] अहं[10] हन्मि प्लवं-गमान् ।
मम बाण-पथं प्राऽऽप्य न कश्चिद् अपि जीवति ॥१९॥
रामं च[11] लक्ष्मणं चैव हतौ पश्य मया[12] रणे[12] ।
हनु-मन्तं स-सुग्रीवम्[13] अङ्ग-दं[13] गन्ध-मादनम् ।
सु-षेणं[14] जाम्ब-वन्तं च तथाऽन्यान् वन-गोचरान् ॥२०॥
मेघनाद-वचः श्रुत्वा प्र-हस्तो वाक्यम् अब्रवीत् ।
एवम् एतन्[15] न[15] सं-देहो यथा वदसि मान-द ॥२१॥
मुसला[16]ऽऽयोधिने मह्यं[17] कः[17] स्थास्यति[18] रणाऽजिरे ।
वानरेषु न मे चिन्ता चल-चित्तेषु रावण ॥२२॥

---

१. प्र–वरुणाः ॥ २. फ–नक्षत्राणि ग्राहश् । प्र–वसवो मारुतश् । ल$_{2}$ अ–त्रसवौ म० । ३. आ च ब रा–प्रथिव्यां । ४. च–च रा० । रा प्र ब म ल$_{1}$ ल$_{2}$ अ–ये च राजानो । ५. च–चिर्जिताश्चैव तेजसा । ब रा प्र म ल$_{1}$ ल$_{2}$ अ–विजितास्ते तेजसा । ६. फ–त्रुटितः पाठः । ७. ब–मनुष० । ८. प्र ब म ल$_{1}$ ल$_{2}$ अ–च । ९. आ–यत्तु । रा अ–वेतु । १०. आ फ च–राजन्नाहं । ११. च–वा । १२. ल$_{2}$–रणे मया । म–इत्यत आरभ्य सर्गसमाप्तिं यावत् त्रुटितः पाठः । १३. आ–सुग्रीवमङ्गदं । रा ल$_{2}$–सुग्रीवं सांगदं । १४. फ–सुखेन । १५. आ–एव । १६. रा–मुसलायोधिको । ब–मुसुलायोधिनो । प्र–मुसलायुधेन । आ फ–०लायोधिनो । म च–मुशला० । ल$_{2}$–मुसुलायोधिने । १७. फ–मेघ कः । च–मह्येकः । रा–मह्य क । १८. च–स्थस्यति । १९. प्र–मानद ॥

मानुषेषु[1] च क्लीबेषु[2] भक्ष्य-भूतेषु[3] नित्य-दा[4] ॥२३॥
अहम् एको वधिष्यामि तव शत्रून् दशाऽऽनन[5] ।
सुखी भव महा-राज[6] यथेष्टं वि-चरस्व[7] च[8] ।
मुसलं[9] भ्राम-यानस्[10] तु रावणं समुद्-ऐक्षत[11] ॥२४॥
एवम् उक्ते[12] प्र-हस्तेन धूम्राऽक्षो[13] वाक्यम् अब्रवीत् ।
आ-गतौ[14] यदि तौ राजन् मानुषौ राम-लक्ष्मणौ ॥२५॥
बद्ध्वा सेतुं सम्-उद्रे तु वानराश्[15] च तरस्-विनः[16] ।
लंका-मूले स्थितास्[17] तस्मात् सं-नह्यध्वं[18] निशा-चराः[19] ॥२६॥
गच्छामस् त्वरितं[20] तत्र यत्र तद् वानरं बलम् ।
सुख-सुप्तान् हनिष्याम[21] एतद् हि मम रोचते ॥२७॥
महोदरोऽथ[22] निर्-भर्त्स्य धूम्राऽक्षं[23] वाक्यम् अब्रवीत् ।
सु-रक्षितं च रामेण सु-ग्रीवेण च तद्[24] बलम् ॥२८॥
वानरैश् च महा-वीर्यैः[25] समन्तात् परि-वारितम्[26] ।

---

१. ल$_2$ अ—मानुष्येषु । २. रा ब ल$_1$ ल$_2$ अ—दीनेषु । ३. फ—०रूपेषु । ४. फ—मे सदा । रा ल$_2$—नित्यसः । फ—हनिष्यामि । ५. रा—ददानन ॥ ६. फ—महाश्रय । ७. आ— विरमस्व । ८. च रा प्र ब ल$_1$ ल$_2$ अ—यं । ९. आ—मुशलं । च—सुसलं । प्र ब—मुसुलं । १०. च—भ्रामभाणस् । रा अ—भ्राममानस् । ब—भ्रममाणस्तु । ल$_2$—भ्रामयाणस्तु । ११. फ—रावणाननमैक्षत ॥ १२. ल$_1$—उक्तो । १३. च—धुम्राक्षो । १४. च—आगंतौ । १५. फ—........ स्तास्त्र । १६. च—तपास्विनः । १७. प्र ब—स्थितस् । १८. आ—संनधंध्वं । १९. च—निशाचरः । २०. च रा ब ल$_1$ ल$_2$ अ—त्वरितास् । २१. रा—हन्याम । अ—हनिष्यामि । २२. फ—महोदरोपि निर्भर्त्स्यं । रा—महोदये तु निभरस्य । च म—महोदरोप्यानिर्भर्त्स्यं । २३. रा—धूम्राक्ष । २४. च—त्रुटित । २५. रा ब ल$_1$ ल$_2$ अ—महावीरैः । २६. च—परिवारित म ।

न तत्र[1] गमनं युक्तं पुर[2]-गुप्तिर् वि-धीयताम् ॥२९॥
पूर्वम्[3] एतद् अभूत् कृत्यं परे[4] पारे महोदधेः ।
सेतौ[5] वा बध्यमाने[6] तु[7] विघ्नः कार्यो[8] निशा-चराः[9] ॥३०॥
साम्प्रतं त्व् आ-गते सैन्ये[10] पुरस्ताद्[11] बलिनो[12] वयम् ।
शस्त्राणां कवचानां च[13] कृत्वा सम्यग् उपाऽर्जनम्[14] ।
[15]तेषां दास्यामहे युद्धं हनिष्यामश्[16] च तान् मृधे ॥३१॥
एतस्मिन्न् अन्तरे वीरः प्र-गृह्य विपुलं भुजम् ।
अति-कायो महा[17]-वीर्यो रावणं वाक्यम् अब्रवीत् ॥३२॥
रक्षितव्या प्रजा राज्ञा[18] रक्षितव्या द्वि-जातयः ।
दस्यवश्[19] च नि-हन्तव्याः परि-पाल्याश् च साधवः ॥३३॥
अ-न्यायेन न हर्त्तव्यं[20] पर[21]-स्वं राक्षसर्षभ[22] ।
एवं यो वर्तते[23] राजा [24]चिरं पाति वसुं-धराम्[25] ॥३४॥
रामेण विनय[26]-ज्ञेन व्य्-अलीकं किं कृतं हि नः ।
जनस्थान-गता येन तस्य भार्या त्वया हृता[27] ॥३५॥
पति-व्रता महा-भागा[28] लङ्कां[29] किं सा प्र-वेशिता ।

---

१. रा ब ल₁–तत्रागमनं । २. आ–परगुप्तिर् । च–पुरं गुप्तिर् । रा प्र ब ल₁ ल₂ अ–पुरे गुप्तिर् । ३. प्र–एवम् । ४. रा–पारे । ५. च–सेतो । प्र–सेनो । ६. प्र–वार्धव्यमाने । च–वाध्यमाने । ७. रा ब ल₁ ल₂ अ–च । ८. रा ल₁–विघ्न कार्यो । प्र–विघ्नाकार्यो । ९. रा–निशाचरा । ल₁–निशाचरः । १०. फ–त्वागतं सैन्यं । ११. प्र–पुलस्त्याद् । १२. ब–वालिनो । १३. च–कवचाणां तु । १४. च–उपार्जितम् । १५. प्र–तेषामुपास्महे । १६. आ फ–हरिष्यामश् । १७. प्र ल₁ ल₂ अ–हवावीरो । १८. फ–राज्ञोथ । च प्र ब ल₁ ल₂ अ–राजन् । १९. रा–दश्यवश् ॥ २०. रा प्र ल₁ ल₂ अ–हन्तव्यं । २१. प्र अ–परं स्वं । २२. रा प्र ब ल₁ ल₂ अ–राक्षसेश्वर । आ–०र्षभा । २३. ब ल₁–यत्रन्तरे । २४. च–चिरे । २५. रा–सुमेदनीम् । प्र ब ल₁ ल₂ अ–स मेदिनीम् ॥ २६. रा ब–विनियज्ञेनं व्यलीकं हि । २७. फ–कृता ॥ २८. आ–०भाग । २९. रा ब प्र ल₁ अ–लंकायां किं प्र० । ल₂– लंकायां किं स प्रवेषिता ।

यतः प्र-वेशिता सीता उत्-पाता दारुणा भृशम् ॥३६॥
कार्याऽकार्ये न जानीध्वं सर्व एव न सं-शयः ।
बलेन गर्विता यूयं वि-नाशाय कुलस्य नः ॥३७॥
तन् मैतं रोचते बुद्ध्या सीता रामाय दीयताम् ।
पर-भार्या न युक्ता तु बलाद् हर्त्तुं निशा-चराः ॥३८॥
सं-मान्य दीयतां तस्मान् मैथिली जनकाऽऽत्म-जा ।
एवम् उक्त्वाऽति-कायस् तु तूष्णीं-भूतो बभूव है ॥३९॥
इत्यार्षे रामायणे सुन्दर-काण्डे राक्षस-मन्त्रणं नाम शततमः सर्गः ॥१००॥
समाप्तश्चाऽऽयं सुन्दर-काण्डः ।[13]

---

१. च–छन्दारुणा भृशम् । रा प्र ब ल१ ल२ अ–दारुणास्ततः । २. च–कार्य कार्ये न जानीध्वं । आ–कार्याकार्येविजानीध्वं । रा ब–कार्यकालं न जा० । प्र ल१ ल२ अ–कार्यकाले न जा० । ३. फ–मध्ये । ४. ब ल१ ल२–युक्तं । ५. आ–सम्मान्य । ब–समान्य । ६. ब–तस्मात् । ७. रा–०त्मजां । ८. अ–उक्तयाति० । रा–उक्ताति० । ९. फ–तूष्णीं संस्थितं रावणं ॥ १०. फ–समुद्रतरणो । आ–लंकापर्वणि राक्षसमन्त्रणं । च रा प्र ब ल१ ल२ अ–राक्षसमंत्रो ॥ ११. रा ल१ ल२ अ–समाप्तोयं । १२. ल२–सुन्दर काण्डः पंचमः। ल१–सुन्दरकाण्डः पंचम इति । १३. अतः परमाऽऽदर्शग्रन्थानां विशिष्टा उपसंहारा एवं भवन्ति । आ–शुभमस्तु कल्याणमस्तु संवत् १६४६ पोषसुदी ११ मंगलवारे श्री आगरा महाकोटे पातिसाह श्री अकबर जलालदीनराज्ये श्री सुंदरदास इदं श्रीरामायणपुस्तकं लिषापितं । श्री अग्गलपुरे श्वेतांबरकपूर-लिषतं यादृश्यं पुस्तकं दृष्ट्वा तादृश्यं सु मम दोषे न दी० । रा–अतः परं युद्ध-कांडो भविष्यति । यस्याऽयं प्रतिसन्धिः । श्रीरामाय नमः । संवत् १९०० ॥ प्र–अतः परं लंकाकाण्डो भविष्यति । अशीतितमे वर्षे सप्तम्यां रविवासरे । ज्येष्ठे मासे सिते पक्षे सुन्दरो लेषितो धिपा(?या) । दयारामेण विदुषा कथा-व्याख्यानसिद्धये । शुभमस्तु ॥ ल१–शुभमस्तु सर्वजगतां । अथातो लंकायां युद्धपर्व लिख्यते । जितं भगवता तेन हरिणा लोकधारिणा । अजेन विश्वरूपेण निर्गुणेन महात्मना ॥ ल२–शुभमस्तु सर्वजगतां । शुभं लिखितं देवीचंद अम-गोत्रा जसरोटे राज विप्रों सव्हणी दा पुरमण्डलवासी सं० १९१७ । देवीचंद अमगोत्रेण कन्यायाः करपीडने । वाल्मीकि पुस्तकं दत्तं देविकायां तटे शुभे ॥ पुस्तक सुन्दरकांड पंडित देवकीनंदन दा । शुभमस्तु सर्वजगतां ॥